श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्री प्रह्लादेन कृतं

# ॥ श्री हर्यष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्री हर्यष्टकम् ॥

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः॥ १ ॥

स गङ्गा स गया सेतुः स काशी स च पुष्करम्।
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षर द्वयम्॥ २ ॥

वाराणस्यां कुरुक्षेत्रे नैमिशारण्य एव च।
यत्कृतं तेन येनोक्तं हरिरित्यक्षर द्वयम्॥ ३ ॥

पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च।
तानि सर्वाण्यशेषाणि हरिरित्यक्षर द्वयम्॥ ४ ॥

गवां कोटिसहस्राणि हेमकन्यासहस्रकम्।
दत्तं स्यात्तेन येनोक्तं हरिरित्यक्षर द्वयम्॥ ५ ॥

ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः।
अधीतस्तेन येनोक्तं हरिरित्यक्षर द्वयम्॥ ६ ॥

अश्वमेधैर्महायज्ञैः नरमेधैस्तथैव च।
इष्टं स्यात्तेन येनोक्तं हरिरित्यक्षर द्वयम्॥ ७ ॥

प्राण प्रयाण पाथेयं संसार व्याधिनाशनम्।
दुःखात्यन्त परित्राणं हरिरित्यक्षर द्वयम्॥ ८ ॥

बद्धः परिकरस्तेन मोक्षाय गमनं प्रति।
सकृदुच्चारितं येन हरिरित्यक्षर द्वयम्॥ ९ ॥

हर्यष्टकमिदं पुण्यं प्रातरुत्थाय यः पठेत्।
आयुष्यं बलमारोग्यं यशो वृद्धिश्श्रियावहम्॥ १० ॥

प्रह्लादेन कृतं स्तोत्रं दुःखसागर शोषणम्।
यः पठेत्स नरो याति तद्विष्णोः परमं पदम्॥ ११ ॥

॥ इति श्री हर्यष्टकम् समाप्तम् ॥